॥ शम्भुस्तोत्रम् ॥

नानायोनिसहस्रकोटिषु मुहुः संभूय संभूय तद्-
गर्भावासनिरन्तदुःखनिवहं वक्तुं न शक्यं च तत् ।
भूयो भूय इहानुभूय सुतरां कष्टानि नष्टोऽस्म्यहं
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ १ ॥

बाल्ये ताडनपीडनैर्बहुविधैः पित्रादिभिर्बोधितः
तत्कालोचितरोगजालजनितैर्दुःखैरलं बाधितः ।
लीलालौल्यगुणीकृतैश्च विविधैर्दुश्चोष्टितैः क्लेशितः
सोऽहं त्वां शरणं व्रजाम्यव विभो शंभो दयाम्भोनिधे ॥ २ ॥

तारुण्ये मदनेन पीडिततनुः कामातुरः कामिनी-
सक्तस्तद्वशगः स्वधर्मविमुखः सद्भिः सदा दूषितः ।
कर्माकार्षमपारनारकफलं सौख्याशया दुर्मतिः
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ३ ॥

वृद्धत्वे गलिताखिलेन्द्रियबलो विभ्रष्टदन्तावलिः
श्वेतीभूतशिराः सुजर्जरतनुः कम्पाश्रयोऽनाश्रयः ।
लालोच्छिष्टपुरीषमूत्रसलिलक्लिन्नोऽस्मि दीनोऽस्म्यहं
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ४ ॥

ध्यातं ते पदाम्बुजं सकृदपि ध्यातं धनं सर्वदा
पूजा ते न कृता कृता स्ववपुषः स्रग्गन्धलेपार्चनैः ।
नान्नाद्यैः परितर्पिता द्विजवरा जिह्वैव संतर्पिता
पापिष्ठेन मया सदाशिव विभो शंभो दयाम्भोनिधे ॥ ५ ॥

संध्यास्नानजपादि कर्म न कृतं भक्त्या कृतं दुष्कृतं
त्वन्नामेश न कीर्तितं त्वतिमुदा दुर्भाषितं भाषितम् ।
त्वन्मूर्तिर्न विलोकिता पुनरपि स्त्रीमूर्तिरालोकिता
भोगासक्तिमता मया शिव विभो शंभो दयाम्भोनिधे ॥ ६ ॥

संध्याध्यानजपादिकर्मकरणे शक्तोऽस्मि नैव प्रभो
दातुं हन्त मतिं प्रतीपकरणे दारादिबन्धास्पदे ।
नामैकं तव तारकं मम विभो ह्यन्यन्न चास्ति क्वचित्
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ७ ॥

कुम्भीपाकधुरंधरादिषु महाबीजादिषु प्रोद्धतं

घोरं नारकदुःखमीषदपि वा सोढुं न शक्तोऽस्म्यहम् ।
तस्मात् त्वां शरणं व्रजामि सततं जानामि न त्वां विना
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ८ ॥

माता वापि पिता सुतोऽपि न हितो भ्रात्रादयो बान्धवाः
सर्वे स्वार्थपरा भवन्ति खलु मां त्रातुं न केऽपि क्षमाः ।
दूतेभ्यो यमचोदितेभ्य इह तु त्वामन्तरा शंकर
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ९ ॥

॥ शंभुस्तोत्रं संपूर्णम् ॥